॥ दशावतरवर्णनं ॥

मार्कण्डेय उवाच
अवतारानहं वक्ष्ये देवदेवस्य चक्रिणः ।
ताञ्शृणुष्व महीपाल पवित्रान् पापनाशनान् ॥ १॥

यथा मत्स्येन रूपेण दत्ता वेदाः स्वयम्भुवे ।
मधुकैटभौ च निधनं प्रापितौ च महात्मना ॥ २॥

यथा कौर्मेण रूपेण विष्णुना मन्दरो धृतः ।
तथा पृथ्वी धृता राजन् वाराहेण महात्मना ॥ ३॥

तेनैव निधनं प्राप्तो यथा राजन् महाबलः ।
हिरण्याक्षो महावीर्यो दितिपुत्रो महातनुः ॥ ४॥

यथा हिरण्यकशिपुस्त्रिदशानामरिः पुरा ।
नरसिंहेन देवेन प्रापितो निधनं नृप ॥ ५॥

यथा बद्धो बलिः पूर्वं वामनेन महात्मना ।
इन्द्रस्त्रिभुवनाध्यक्षः कृतस्तेन नृपात्मज ॥ ६॥

रामेण भूत्वा च यथा विष्णुना रावणो हतः ।
सगणाश्चदभुता राजन् राक्षसा देवकण्टकाः ॥ ७॥

यथा परशुरामेण क्षत्रमुत्सादितं पुरा ।
बलभद्रेण रामेण यथा दैत्यः पुरा हतः ॥ ८॥

यथा कृष्णेन कंसाद्या हता दैत्याः सुरद्विषः ।
कलौ प्राप्ते यथा बुद्धो भवेन्नारायणः प्रभुः ॥ ९॥

कल्किरूपं समास्थाय यथा म्लेच्छा निपातिताः ।
समाप्ते तु कलौ भूयस्तथा ते कथयाम्यहम् ॥ १०॥

हरेरनन्तस्य पराक्रमं यः शृणोति भूपाल समाहितात्मा ।
मयोच्यमानं स विमुच्य पापं प्रयाति विष्णोः पदमत्युदारम् ॥ ११॥

इति ।

